# .. श्री गणपति अथर्वशीर्ष ..

## .. शांति पाठ ..

श्री गणेशाय नमः

ॐ भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ..
स्थिरैरंगैस्तुष्टुवांसस्तनू भिर्व्यशेम देवहितं यदायुः ...1

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः
स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ...2

ॐ शान्तिः शान्तिः शान्तिः ..

## .. आवर्तन ..

हरि ॐ नमस्ते गणपतये .. त्वमेव प्रत्यक्षं तत्वमसि .. त्वमेव केवलं कर्तासि .. त्वमेव केवलं धर्तासि .. त्वमेव केवलं हर्तासि .. त्वमेव सर्वं खल्विदं ब्रह्मासि .. त्वं साक्षादात्मासि नित्यं ..1..

ऋतं वच्मि सत्यं वच्मि ..2..

अव त्वं माम् .. अव वक्तारम् .. अव श्रोतारम् .. अव दातारं ..
अव धातारं .. अवानुचानमवशिष्यं .. अव पश्चात्तात् .. अव पुरस्तात् ..
अवोत्तरातात् .. अव दक्षिणात्तात् .. अव चौर्ध्वात्तात् .. अवाधरात्तात् ..
सर्वतो मां पाहि पाहि समंतात ..3..

त्वं वाङमयस्त्वं चिन्मयः .. त्वं आनंदमयस्त्वं ब्रह्ममयः ..
त्वं सच्चिदानंदः द्वितियोसि .. त्वं प्रत्यक्षं ब्रह्मासि ..
त्वं ज्ञानमयो विज्ञानमयोसि ..4..

सर्व जगदिदं त्वत्तो जायते .. सर्व जगदिदं त्वत्तस्तिष्ठति ..
सर्व जगदिदं त्वयि लयमेष्यति .. सर्व जगदिदं त्वयि प्रत्येति ..
त्वं भूमिरापो ऽ नलो ऽ निलो नभः .. त्वं चत्वारि वाक् पदानि ..5..

त्वं गुणत्रायातितः .. त्वं देहत्रायातीतः .. त्वं कालत्रायातीतः ..
त्वं मूलाधार स्थितोऽसि नित्यं .. त्वं शक्ति त्रायात्मकाः ..
त्वां योगिनो ध्यायंति नित्यं .. त्वं ब्रह्मास्त्वं विष्णुस्त्वं रूद्रस्त्वं इन्द्रस्त्वं
अग्निस्त्वं वायुस्त्वं सूर्यास्त्वं चंद्रमास्त्वं ब्रह्म भूर्भवः स्वरोम् ..6..

गणादिं पूर्वमुच्चार्य वर्णादिं तदनंतरम् .. अनुस्वारः परतरः ..
अर्धेंदुलसितम् .. तारेण रूद्धम् .. एतत्तव मनुस्वरूपम् ..
गकारः पूर्वरूपम् .. अकारो मध्यमरूपम् .. अनुस्वारश्चांत्य रूपम् .. बिंदुः
उत्तररूपम् .. नादः संधानम् .. संहिता संधिः ..
सैषा गणेशविद्या .. गणक ऋषिः .. निचृद्गायत्रीच्छंदः ..
गणपतिर्देवता .. ॐ गं गणपतये नमः ..7..

एकदंताय विद्महे वक्रतुंडाय धीमहि .. तन्नो दंतिः प्रचोदयात् ..8..

एकदंतं चतुर्हस्तं पाशांकुशधारिणम् .. रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ..
रक्तंलंबोदरं शूर्पकर्णकं रक्तवाससं .. रक्तगंधानुलिप्तांगं रक्तपुष्पैः सुपूजितम्
..भक्तानुकंपिनं देवं जगत्कारणम् अच्युतम् .. आविर्भूतं च सृष्टयादौ प्रकृतेः
पुरूषात्परम् .. एवं ध्यायति यो नित्यं स योगी योगिनां वरः ..9..

नमो व्रातपतये नमो गणपतये नमः
प्रमथपतये नमस्ते अस्तु लंबोदराय एकदंताय
विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः ..10..

## .. एक आवर्तन पूर्ण ..

## .. फलश्रुति ..

एतद् अथर्वशीर्षं योऽधिते .. स ब्रह्मभूयाय कल्पते .. स सर्वविघ्नैर्न बाध्यते
.. स सर्वतः सुखमेधते .. सपञ्चमहापापात् प्रमुच्यते .. सायम् अधियानो
दिवसकृतं पापं नाशयति .. प्रातरधीयानो रात्रिकृतं पापं नाशयति .. सायं प्रातः
प्रायुञ्जानो अपापो भवति .. सर्वत्राधियानोऽपविघ्नो भवति .. धर्मार्थकाममोक्षं च
विंदति .. इदम् अथर्वशीर्षं शिष्याय न देयम् .. यो यदि मोहाद्दास्यति .. स
पापीयान् भवति .. सहस्त्रावर्तनात् . यं यं कामम् अधीते .. तं तमनेन साधयेत्
.. 11 ..

अनेन गणपतिम् अभिषिंचति .. स वाग्मी भवति .. चतुर्थ्यामनश्नन जपति .. स विद्यावान् भवति .. इति अथर्वण वाक्यम् .. ब्रह्माद्यावरणं विद्यात् .. न बिभेति कदाचनेति .. 12 ..

यो दुर्वांकुरैर्यजति .. स वैश्रवणोपमो भवति .. यो लाजैर्यजति .. स यशोवान् भवति .. स मेघावान् भवति .. यो मोदकसहास्त्रेण यजति .. स वाञ्छित फलमवाप्नोति .. यः साज्यसमिद् भिर्यजति .. स सर्वं लभते .. स सर्वं लभते .. 13 ..

अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा .. सूर्य वर्चस्वी भवति .. सूर्यग्रहे महानद्यां प्रतिमासंनिधौ वा जप्त्वा .. सिद्धमंत्रो भवति .. महाविघ्नात् प्रमुच्यते .. महादोषात् प्रमुच्यते .. महापापात् प्रमुच्यते .. स सर्वविद् भवति .. स सर्व विद् भवति .. य एवं वेद .. इति उपनिषत् .. 14 ..

ॐ सहनाववतु .. सहनौभुनक्तु .. सह वीर्यं करवावहै .. तेजस्विनावधीतम् अस्तु .. मा विद्विषावहै ..

ॐ भद्रं कर्णेभिः शृणुयाम देवाः .. भद्रं पश्येमाक्षभिर्यजत्राः ..
स्थिरैः अंगैः तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः .. 1 ..

ॐ स्वस्तिनो इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ..
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु .. 2 ..

**.. ॐ शान्तिः शान्तिः शान्तिः ..**